# शम्भुशिक्षा

प्रणम्य शिरसा लक्ष्मीं कालकां च सरस्वतीम्
गणेशं च तथा शम्भुं शिक्षां वक्ष्यामि शाङ्करीम्

काण्डोऽग्निसंज्ञो विज्ञेयश्चतुर्थस्तैत्तिरीयके
ग्रह इत्याददे प्रश्नः सजोषान्तो विधीयते

उख्यमित्यग्निकाण्डस्य प्रश्नद्वितयमादिकम्
अन्त्यानुवाकसहितं वेदविद्भिरुदाहृतम्

इषे प्रभृत्यपामन्तं प्रश्नानां युक्षवसंयुतम्
अन्त्यानुवाका याज्याख्यास्त्रयोविंशतिरीरिताः

देवसवितरारभ्य उपयामान्तसंज्ञिकम्
वाजपेयाभिधानं षडनुवाकं विपश्चितः

समिद्दिशां समिद्धोऽग्नेर्मन्वे स्यात्प्रष्ठ्यसंज्ञिकम्
जीमूतादि चतुष्कं च गायत्री द्वितयं तथा

यत्तत्पञ्चमकाण्डे चानुवाकत्रितयं विना
प्रष्ट्यमेव महाप्रष्ठ्यमिति वेदविदो विदुः

पञ्चानुवाकमाश्मन्नित्यस्य प्रश्नस्य चादिकम्
विकर्षसंज्ञमित्याहुर्ऋषयो वेदवादिनः

विहव्यसंज्ञा वाजोनः प्रभृतीनां विधीयते
त्रयाणामनुवाकानां वेदलक्षणवेदिभिः

दशमादि त्रयः प्रश्नाः इष्टयोनाम उच्यते
ग्रहणं त्वेकमुद्दिश्य पदं वै क्रियते यतः

तदन्यत्र तु न ग्राह्यं यज्ञटाभिमत्तैरितिवतरति
त्रिपदप्रभृतिष्वेव वक्तीयस्त्वन्ययोगतः

अलोप एव कर्णोक्ते रन्ययोगेऽपि सर्वदा
अवर्णान्तोपसर्गाश्च आरमापद्यते क्वचित्
ओष्ठशब्दादि परश्चेदवर्णा लुप्यते नुदा
ऋकारोत्तररेफं च पूर्वतः स्वरभाक् स्थितः

स्वर्यतेऽस्मात्परो रेफो दीर्घात्परो भवेद्यदि
रेफः करेणुश्च हकार ऊर्ध्वे
लःकर्विणीति स्वरभक्तिरुक्ता
लोहारिता शेहरिणी हहस्तिनी
हंस पदापिषोर्ध्वे

टवर्गे वक्रमध्ये ळे जिह्वाग्रेण तथा स्पृशेत्
उदात्तादनुदात्तस्य स्वरितो यत्र दृश्यते

पिपीलिकेति विज्ञेया सवर्णत्वं यदा भवेत्
दीर्घात् पिपीलिकादीर्घा मध्यमा च सवर्णयोः

पदैक्ये पाकवत्युक्ता प्यन्यावत्सानुसारिणी
द्वन्द्वे होरात्रयोरोत्वं यातिरोर्ध्वे सुवस्त्वपि

यस्तामविद्वानित्यत्र नानुस्वारगमो भवेत्
अनार्षे नैव विज्ञेयो ह्यप्यकारादि संग्रहः

स्वरान्यौ तु व्यानौदान शब्दयोश्च सुबन्तयोः
नित्यादिना यमात्पूर्वं इदुत्पूर्वात्त एतिरम्

सवर्णा यत्र दृश्यन्ते विसर्गो चैव दृश्यते
पिपीलिकेति विज्ञेया तदन्यो दीर्घ उच्यते

पृक्तादपृक्ते दीर्घश्च गुणो वर्णाद्भवेद्यतः
उभावादेश ऊभावस्तत्तस्मात्सांहितादपि

अनुशब्दो ह्युकारस्य वकारे वैकृते स्थिते
जटायां नैव लोपः स्यादकारस्येति निर्णयः
काण्डानुक्रमतो ह्यादौ जटायां दृश्यते यथा

अलोपलोपकार्याणि त्रिपदादौ तथोत्तरम्
उक्तः प्रथमतो मन्त्रः पुनर्यदि स उच्यते
तत्तत्कार्यं यथापूर्वं कर्तव्यं वेदवित्तमैः
षत्वणत्वस्वभावेषु पदुक्तमुपदेशतः
ग्रहणं तत्करोत्येतत् कार्यं सर्वत्र नान्यथा
तथेयातां ब्राह्मणायेत्योपेत्याक्षरसंहिता
तत्रापि पूर्व प्राधान्यादैकारोऽत्र न संभवेत्
यथा पुनस्कृधि बलाद्विलोमे सत्यमिष्यते
प्राधान्यात्पुनरित्यस्य निमित्तत्वात्कृधेरिति
अङ्गुलीस्वरनिर्देशे व्यङ्गमङ्गो न निर्दिशेत्
अङ्गे त्वन्यांशं नादानुस्वारजं स्वरितं न्यसेत्
स्वरोदयेत्वनुस्वारो भवेदध्यणुमात्रिकः
विरामश्च तयोर्मध्ये वैशेषिकाविदीर्घयोः
उदात्तात्परतो नास्ति प्रचयः पूर्वतोऽपि वा
स्वरितः प्रचयादूर्ध्वं निहतात् प्रचयः परम्
दीर्घात्पूर्वो विसर्गो यो दीर्घान्तो यत्र दृश्यते
मध्यमेति विजानीयादेकमात्रं प्रयुज्यते
वैशेषिकाख्या च विदीर्घयोश्चेत्
पिपीलिका दीर्घयुगे च मध्यमा
दृष्टा च वत्सानुसृति स्त्वसाम्ये
मध्येणुमुख्यं तु विरामकालः

कनिष्ठिकानामिकाभ्यां च मध्यमा च प्रदेशिनी

नीच स्वारधृतोदात्तान् अङ्गुष्ठाग्रेण निर्दिशेत्
अनुदात्तः कनिष्ठादौ नाम्यन्ते स्वरितः स्मृतः
प्रचयो मध्यमा मध्ये तर्जन्यादावुदात्तकः

अनुदात्तो हृदिज्ञेयो मूर्ध्न्युदात्त उदाहृतः
स्वरितः कर्णमूलीयः सर्वास्येति प्रचयः स्मृतः

न रेफे वा हकारे वा द्विर्भावो जायते क्वचित्
न च वर्ग द्वितीयस्य न चतुर्थेव कथंचन

नङौ यत्र पदान्ते तु यवहेषु परेषु च
द्वित्वं नैवाभिगच्छेतां नङौ व्यद्रपरौ विना

ये च स्वारात्परो रेफो ह्रस्वस्वारात्परस्थितः
उच्चाच्च ऋपरो रेफः स्वरितः प्रचयोच्चकाः
पदादौ प्रचयो नास्ति स्वरादेकपदे ततः
नास्त्युदात्तोऽपि विज्ञेयो हस्तविन्यासकर्मणि

पदकाले पदान्मान्तात् पवर्गे परतः स्थिते
पुनः प्रयत्नमित्याहुः ऋषयो वेदवादिनः

एवं क्रमे जटायां च ऋषिवाक्येऽपि विश्रुतः
ओमः पवर्ग संयोगे प्रयत्नो नेष्यते पृथक्

मकाराच्च पवर्गोर्ध्वे वेष्टने नान्पुयात्तथा
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्

मारुतस्तुरसि चरन्मन्द्रं जनयति स्वरम्
प्रश्नानुवाकाद्यारम्भे सविसर्गोच्चरो हरिः

ससन्धिः प्रणवस्यादि विरामे स्वरितो भवेत्

विधेर्मध्यस्थनासिक्यो न विरोधो भवेत्स्मृतः
तस्मात्करोति कार्याणि वर्णानां धर्म एव तु
इन्द्रिया विषयो योऽसावणुरित्युच्यते बुधैः

चतुर्भिरणुभिर्मात्रा परिमाणमिति स्मृतम्
रङ्गप्लुतश्चतुर्मात्रः शुद्धप्लुतस्त्रिमात्रिकः

दीर्घ उच्चद्विमात्रः स्याद्ध्रस्वः स्यादेकमात्रिकः
परस्परस्य संयोगः स्पर्शानां संभवेद्यदि

तयोरादि श्रुतिर्नास्ति विरामव्यञ्जनस्य च
अनन्त्यं च भवेत्पूर्वमन्त्यं च परतो यदि

तयोर्मध्ये यमस्तिष्ठन्नासिकास्थानमुच्यते
नासिक्यत्वमुरस्यत्वं पञ्चमैर्हस्य योगतः

अन्तस्थाभिरुरस्यत्वं कण्ठ्यत्वं केवलस्य तु
पदादौ पदमध्ये वा स्थितस्योष्म परस्य वै

प्रथमस्य द्वितीयत्वं पूर्वं कुर्वीत पण्डितः
धूङ्क्ष्णा दङ्क्ष्णव इत्यत्राप्यनुस्वारो विधर्मतः
शम्भुशिक्षासमाप्ता